षड्विंशाध्यायारम्भे प्रजापालः पप्रच्छ, कथं ज्योतिषः शरीरस्य मूर्त्तिग्रहणमभूदिति। महातपा उवाच, यदा ज्ञानशक्तिः सनातन आत्मा द्वितीयमैच्छत्तदा तेजः समुत्थितं, तत् सूर्य्यो भास्वानिति च बभूव। तस्य तेजसो यच्छरीरमभवत् स रविः कीर्त्यते, तस्य च जगदुद्भासनादिधर्म्मवत्त्वात् भास्करादीनि नामानि जातानि। एतस्यैव तेजसा पृथक् पृथक् द्वादश आदित्याः सम्भूताः। ततो देवास्तमुग्रतेजसन्तुष्टुवुः। तुष्टश्च स स्वतेजः शमयामास। सप्तम्यां सूर्य्यस्य मूर्त्तिग्रहणमभवत्। ततः सप्तम्यां सूर्य्यपूजनेनाभीष्टफलं जायते।

सप्तविंशाध्याये महातपसाऽन्धकासुरवधकथा कथिता। ब्रह्मणः सकाशाल्लब्धवरोऽसौ दैत्यो देवान् स्ववंशमानिनाय। ततो देवा ब्रह्मणा सहितास्त्र्यम्बकं शरणं गताः। रुद्रः सगणोऽन्धकं हन्तुं निर्ज्जगाम। प्रथममन्धकस्य सेनापतिर्नीलनामा दैत्यो हस्तिस्वरूपेण रुद्रान्तिकमागतः, स च सिंहरूपेण वीरभद्रेण हतः। वीरभद्रस्तं निहत्य तस्य चर्म्म रुद्रायार्पितवान्। ततः प्रभृति रुद्रोऽपि गजचर्म्मपटोऽभवत्। अथ रुद्रस्तमन्धकं त्रिशूलेनाजघान। हतस्य तस्य यावन्तो रक्तविन्दवो भुवि निपेतुस्तावन्तोऽन्धका बभूवुः। ततो रुद्रोऽतिरुषाऽष्टौ मातॄः ससर्ज्ज, ताश्च ब्राह्मी, कौमारी, ऐन्द्री, याम्या, वाराही, वैष्णवी, योगीश्वरी, माहेश्वरी च। ताभिश्च रक्ते शोषिते सोऽसुरः क्षयं नीतः। एतद्धि वृत्तमष्टम्यामभवत्। ततोऽष्टमी मातॄणां तिथिः। अन्धककथा तु रक्तवीजकथया साद्दृश्यं भजते।

अष्टाविंशाध्यायारम्भे प्रजापालः कथं प्रकृतिः कात्यायनी-रूपेण समुत्पन्नेति पप्रच्छ। महातपा उवाच, पुरा किल सिन्धु-द्वीपोनाम राजा वेत्रवतीगर्भे वेत्रासुरनामानं दैत्यमुत्पादयामास। स चातीव बलवान् पृथिवीं जित्वा स्वर्लोकमपि जिगाय। ततो देवा ब्रह्माणं शरणं ययुः। तान् दृष्ट्वा ब्रह्मा चणं चिन्तयामास। चिन्तयतस्तस्य पुरतः काचिदष्टभुजा सिंहाधिरूढ़ा कन्या प्रादुरासीत्, सा दिव्यवर्षसहस्रं युद्धा वेत्रासुरं निजघान। अयं वेत्रासुरः, वृत्रासुरस्त्वन्यः स च महेन्द्रेण निहतः। नवम्यामेतत्सङ्घटितमिति तस्या नवमी तिथिः।

ऊनत्रिंशाध्याये महातपसा दिगुत्पत्तिकथा समाख्याता। आदिसर्गे सृष्टिं सृजतो ब्रह्मणः श्रोत्रेभ्यो दिशः समुत्पन्नाः। ताश्च क्रमेण इन्द्रादिभ्यः प्रदत्ताः। दिशां तिथिर्दशमी।

त्रिंशाध्याये महातपसा धनदस्योत्पत्तिः कथिता। यथा सृष्टिकामस्य ब्रह्मणो मुखाद्वायुर्विनिर्ययौ, स चातीव प्रचण्डो बभूव। तं ब्रह्मा मूर्त्तोभवेत्युवाच। स च मूर्त्तिमान् बभूव। ततः स धनपतिः कृतः। तस्य तिथिरेकादशी, तत्र योऽनग्निपक्काशी भवति तस्य धनपतिस्तुष्टः सर्व्वं प्रयच्छति।

एकत्रिंशाध्याये महातपसा विष्णूत्पत्तिकथा कथिता। स च प्रजापालनार्थं मूर्त्तिमत्परब्रह्मैव। तस्य तिथिर्द्वादशी।

द्वात्रिंशाध्याये महातपसा धर्म्मस्योत्पत्तिः कथिता। पूर्व्वं ब्रह्मा प्रथमं प्रजाः सिसृक्षुः पालनञ्च विचिन्तयन् स्थितः। एवं चिन्तयतस्तस्य दक्षिणादङ्गाच्छ्वेतकुण्डलः श्वेतमाल्यानुले-

पनः पुरुषः प्रादुर्बभूव । तं चतुष्पादं वृषाकृतिं दृष्ट्वा भगवानुवाच प्रजा इमाः पालय, जगतो ज्येष्ठो भव । असौ कृते चतुष्पादभवत्, त्रेतायां त्रिपात्, द्वापरे द्विपदः, कलौ त्वेकेन पादेन लोकान् पालयति । स ब्राह्मणानां षोढ़ा, क्षत्रियाणां त्रिधा, वैश्यानां द्विधा, शूद्राणामेकधैव व्यवस्थितः । स च धर्म्मः प्रथमं भ्रातुः पत्नीं ताराञ्चिष्टक्षुणा सोमेन पीड़ितोऽभूत् । तथा पीड़ितश्च घोरमरण्यमाविवेश । तस्मिन् गते देवा असुराश्च निर्म्मर्य्यादाः परस्परं बाधितुमारेभे । क्रमेण तेषां महत् युद्धं प्रवहते । तान् युध्यमानान् दृष्ट्वा नारदो ब्रह्माणमुपेत्य प्राह । ततो ब्रह्मा तान् युद्धतो निव्वर्त्त्य तैर्धर्म्ममन्वेष्टुं गतः, ददर्श च महारण्ये चरन्तं वृषाकृतिं तम् । ततो देवास्तं तुष्टुवुः । ततः सन्तुष्टोऽसौ प्रसन्नमनास्तानपश्यत् । दृष्टमात्रास्तु ते धर्म्मरताः शान्तिमुपगताः । ततो ब्रह्मा तस्य त्रयोदशीं तिथिं कल्पयामास । तच्चारण्यं धर्म्मारण्यमिति नाम्ना प्रख्यातमकरोत् ।

त्रयस्त्रिंशाध्याये महातपसा रुद्रोत्पत्तिः कथिता । अस्य तिथिश्चतुर्दशी । इयं च कथा पूर्व्वोल्लिखितरुद्रोत्पत्तिकथया प्राय ऐक्यं भजते इति न पुनरुक्ता ।

चतुस्त्रिंशाध्याये आत्मनि योगं गतस्य परमेष्ठिनो देहाद्धूमवर्णकृतत्विषस्तन्मात्रास्तपस्विनोनिर्ययुः । तान्दृष्ट्वा ब्रह्मा उवाच भवन्तो गृहमेधिनः पितरः सन्त्विति । तत्र ये ऊर्द्धवक्त्रास्ते नान्दीमुखसंश्रिताः । अथ पितामहस्तेषां पन्थानं दक्षिणायन-

संज्ञमकरोत्। तेषां तिथिश्चामावास्या कल्पिता। तस्याञ्च ते पूज्यन्ते।

पञ्चत्रिंशाध्याये महातपसा सोमसम्बन्धिनी कथा कथिता। अत्रिर्नाम ब्रह्मणो मानसः पुत्रस्तस्य पुत्रः सोमः। स च सप्तविंशतिं दक्षकन्या उपयेमे, परं रोहिण्यामेवानुरक्तो बभूव। अथ तस्येतराः पत्नाः स्वपितरमुपगम्य तस्यानौचित्यं विज्ञापयामासुः, दक्षः सोममसकृदागत्य समतां कर्त्तुमनुशशास, सोमस्तु तद्वचनं नाकरोत्। ततो दक्षः शशापान्तर्हितो भवेति, सोमः क्षयं गतः। सोमे क्षीणे देवा मनुष्याः पशवो वीरुधओषध्यश्च क्षयं प्राप्ताः। ततः सर्व्वे देवाः विष्णुं शरणं ययुः। ततो विष्णुवचनेन ते समुद्रं ममन्थुः। मथिते च तस्मिन् सोमः पुनर्जातः। योऽसौ जीवसंज्ञकः पुरुषो देहिनां देहे तिष्ठति स एव सोमः। तस्य च पौर्णमासी तिथिर्निर्द्दिष्टा।

षट्त्रिंशाध्याये प्रजापालो नृपतिरात्मनोऽपरेषाञ्च मणिजानां राज्ञां जन्मवृत्तमाकर्ण्य लब्धज्ञानस्तपश्चरणार्थं वृन्दावनं गतवान्, तत्र गत्वा च गोविन्दनामानं हरिं तुष्टाव। ततः स्वकलेवरं त्यक्त्वा मोक्षं प्राप।

सप्तत्रिंशाध्याये पृथिव्या कथं भक्तिमद्भिर्नरैः, स्त्रीभिर्वा, कथमाराध्यसे इति पृष्टो वराहः प्रोवाच। हे देवि अहं न वित्तैर्न जपैः किन्तु भावैरेव साध्योऽस्मि। इदानीं भक्तानां कायक्लेशं वदामि। यो मनुष्यः कर्म्मणा मनसा वाचा मच्चित्तो भवेत्, तस्य विविधानि व्रतानि वक्ष्यामि। अहिंसा सत्यम-

स्तेयं ब्रह्मचर्य्यञ्चैतानि मानसव्रतानि, एकभक्तं, नक्तमुपवासादिकञ्च कायिकव्रतानि। वेदाध्ययन-सत्यभाषणापैशुन्यहितानि च वाचिकव्रतानि। पुराकल्पे ब्रह्मपुत्र आरुणिर्नाम कश्चिदुग्रतपा ऋषिरजायत। स द्विजसत्तमस्तपोऽर्थी वनमगमत्। उपवासपरायणश्च रम्ये देविकायास्तटे तपस्तेपे। कदाचित् सोऽभिषेकाय महानदीं जगाम। तत्र स्नात्वा जपन्नयतमात्मनो वल्कलानां जिहीर्षया समायान्तं धनुष्पाणिं कञ्चित् व्याधं ददर्श। तं दृष्ट्वा स हरिं ध्यायन् तत्रैव स्थितः। व्याधस्तु तमन्तर्गतं हरिं दृष्ट्वा भीतः सशरं चापमुत्सृज्य वचनमब्रवीत्। हे ब्रह्मन् त्वां दृष्ट्वा मे हृदयाज्जिघांसावृत्तिर्दूरं गता। इदानीं तप्तुमिच्छामि, उपदेशदानेन प्रसादं कर्त्तुमर्हसीति। स ऋषिर्ब्रह्महेति मत्वा तस्मै न किमप्युत्तरं ददौ, व्याधस्तथापि तत्र तस्थिवान्। अथैकदा जलमग्नं तमृषिं हन्तुं कश्चिद्व्याघ्रो वेगेनागतः। तमायान्तं स व्याधो निजघान। ततस्तच्छरीरात्कश्चित् पुरुषो निर्गतो ब्राह्मणं तं प्राह, अहं त्वत्प्रसादान्मुक्तपाप्मा विष्णुस्थानं गच्छामि। अथ कोऽसीति ब्राह्मणेन पृष्टोऽसौ प्राह, अहं पूर्व्वजन्मनि दीर्घबाहुरिति ख्यातो वेदज्ञ आसम्। ब्राह्मणांश्च भृशमवज्ञातवान्। ततो ब्राह्मणाः क्रुद्धा मां व्याघ्रो भविष्यतीति शेपुः। ऊचुश्च इषुघातं लब्ध्वा यस्मिन्काले भवान् कण्ठगतैः प्राणैर्द्विजवक्त्रात्तु नमो नारायणायेति श्रोष्यसि ततश्च ते स्वर्गगतिर्भवितेति। अहञ्चाद्य व्याधेन हतस्तव मुखान्नमो नारायणायेति श्रुत्वा निष्पापोऽस्मि। इत्युक्त्वा स स्वर्गं

ययौ। ब्राह्मणश्च तुष्टो व्याधमुवाच, अद्य त्वयाऽहं रचितस्तुष्टोऽस्मि, वरं वृणु। व्याध उवाच यन्मया सहाद्य सम्भाषणं कृतमेष एव वरः, मां शाधि किङ्करोमीति। ऋषिरुवाच देविकास्नानेन मद्दर्शनेन विष्णुनामश्रवणेन च तव पापानि विनष्टानि, विशुद्धोऽसि, साम्प्रतं तपः कुरु। व्याध उवाच, कथं विष्णुः प्राप्यते। ऋषिराह भक्त्यैव। हे पुत्र त्वं गणान्नमनृतवादञ्च परित्यज्यात्रैव तपश्चरन्निवस। एवमुक्त्वा स ऋषिस्तं संस्थाप्यान्यत्र गतः।

अष्टात्रिंशाध्याये वराहेण व्याधस्य तपःसम्पदभिहिता। तथा निराहारं तपः कुर्व्वतस्तस्याश्रमे कदाचिद्दुर्व्वासाः समागतः। व्याधश्च परया भक्त्या तस्यातिथ्यं सम्पादयामास। स मुनिः प्रसन्नस्तस्मै साङ्गाः सरहस्या वेदा ब्रह्मविद्या पुराणानि च ते प्रत्यक्षाणि भविष्यन्तीति वरं दत्त्वा तस्य सत्यतपा इति नामाऽकरोत्।

ऊनचत्वारिंशाध्याये सत्यतपसा पृष्टो दुर्व्वासाः प्रथमं शरीरभेदान् कथयित्वा पश्चात्परब्रह्मस्वरूपं कथितवान्। तस्य प्राप्त्युपायस्तु दानयज्ञादीनीति चोक्तवान्। ततः सत्यतपसा पृष्टं, दानयज्ञाद्यक्रमेण निर्धनेन कथं स प्राप्यत इति। दुर्व्वासा उवाच पृथ्वी खलु पुरा रसातले निमग्ना व्रतोपवासैर्नियमैश्च तं देवमाराधयामास। महता कालेन च प्रसन्नो देवस्तामुज्जहार। ततः सत्यतपाः पप्रच्छ, धरण्या कोऽसावुपवासः सञ्चीर्णः व्रतानि च कान्यनुष्ठितानि। ततो दुर्व्वासा धरण्या यद्यद्व्रतं कृतं तत्सर्व्वं कथयामास।

इत आरभ्य—पञ्चाशाध्यायान्तं यावत् धरणीव्रतानि सविस्तरमुक्तानि ।

एकपञ्चाशाध्याये वराहेणोक्तं, सत्यतपाः सर्व्वमेतत्समाकर्ण्य हिमवत्पार्श्वे पुष्पभद्रानदीतीरे भद्रवटस्याधःप्रदेशे आश्रमं निर्म्माय तपश्चरितुमारेभे । ततो धरण्या अगस्त्यभद्राश्वयोर्वृत्तं पृष्टो वराह उवाच । भद्राश्वो राजा भगवन्तमगस्त्यं स्वगृहगतं प्रेक्ष्य पप्रच्छ, भगवन् केन कर्म्मणा भवसंसृतिश्छिद्यते । किं कृत्वा च मूर्त्ता न शोचन्तीति । अगस्त्येन तु कथितम्—यदा नाहो न रात्रिर्न दृशो दिशश्च न द्यौर्न देवा न दिनं न सूर्य्यस्तस्मिन् काले पशुपालो नाम राजाऽनेकान् पशून् पालयामास । स राजा कदाचित्पूर्व्वं समुद्रं दिदृक्षुर्महोदधेस्तीरे तूर्णं गत्वा वनमेकं ददर्श, तत्र खलु सर्पा निवसन्ति । तत्राष्टौ द्रुमाः, कामवहा नदी च, पञ्च प्रधानाः पुरुषाः, स्त्री चैका तेजसा दीप्यमाना दृष्टा । कश्चित्त्रिवर्णः पुरुषश्च तां धारयन् स्थितः । नृपस्तद्वनं प्रविष्टमात्र एव तैः सर्पैः संवेष्टितो मोक्षोपायं चिन्तयामास । एवं चिन्तयतो राज्ञस्त्रिवर्णः पुरुषोऽसौ समागतः प्रोवाच क्व यास्यसीति । एवं ब्रुवाणस्य तस्य महन्नाम व्यजायत, सोऽपि राजानं संरुध्य बुध्यस्वेति चाब्रवीत् । एवमुक्ते ततः स्त्री तु सा तं राजानं रुरोध । ततोऽन्यः पुरुषस्तं नृपं संवेष्ट्य स्थितवान् । ततोऽपरे पञ्च पुरुषा आगत्य तं नृपसत्तमं संवेष्ट्य स्थिताः । ततस्ते सर्व्वे दस्यव एकीभूताः शस्त्रमादायान्योऽन्यं मथितुं प्रवृत्ता भयाक्रान्ताः, लीनैस्तैर्नृपतेर्वेश्म परम-

शोभनमभवत्। ततस्त्रिवर्णः पुरुषस्तं राजसत्तममब्रवीत् हे महाराज अहं तव पुत्रोऽस्मि, ब्रूहि ते किं करवाणि, वयं भवन्तं बन्धुमिच्छामः। एवमुक्तो राजा तन्नरं पुनरब्रवीत्। पुत्रो ममान्येषामपि कर्त्ता भवति, नाऽहं सुखैर्भावैर्लब्धु-मिच्छामि॰। एवमुक्तो राजा तमात्मजमकरोत्। तैर्विमुक्तश्च स्वयं तेषां मध्ये विरराम।

द्वापञ्चाशाध्याये पुनरगस्त्यः प्रोवाच, स त्रिवर्णः पुत्रः अहं-नामानं पुत्रमसृजत्, तस्याप्यवबोधस्वरूपिणी कन्याचाभवत्। सा तु मनोज्ञं विज्ञानदं पुत्रं ससर्ज्ज। तस्यापि पञ्च साधुरूपा-स्तनया अभवन्। तेषाञ्चाश्चाभिधेयाः पुत्रा॰जाताः। ते प्रथमं दस्यव॰आसन्, पश्चाद्राज्ञा वशीकृता बभूवुः। ते अमूर्त्ता इव नवद्वारमेकस्तम्भं चतुष्पथं नदीसहस्रसङ्कीर्णं पुरं निर्म्मितवन्तः। ततस्ते एकीभूतास्तत्पुरं प्रविविशुः। क्षणात्पुरुषो मूर्त्तिमान् पशुपालोऽभवत्। अथ तत्पुरस्थितः पशुपालो नृपो वाचकान् शब्दान् संसूच्य वेदान् सस्मार। स राजा सर्व्वाणि व्रतानि नियमान् क्रतूंश्च चकार। अथ स नृपः खिन्नः कर्म्मकाण्डेषु मतिं चकार। स योगनिद्रायां स्थित्वा चतुर्व्वाहुं चतुर्व्वक्त्रं पुत्रमेकं ससर्ज्ज। ततो नृपः समुद्रे वने तृणादिषु च समो-ऽभवत्।

त्रिपञ्चाशाध्यायारम्भे भद्राश्व उवाच, हे ब्रह्मन् मत्प्रश्नमा-कर्ण्य त्वयैवं कथिता, तत्केन हेतुना तस्याविर्भूतिरभवत्। अगस्त्य उवाच, सर्व्वस्मिन्विषये स्थिता विचित्रैवेयं कथा सर्व्वत्र

समरूपेव शोभते। पशुपालाद्यचतुष्याच्चतुर्मुखस्य पुरुषः समुत्पन्नः, स गुरुः कथायाः प्रवर्त्तकश्च। तस्य पुत्रः स्वरो नाम, असौ सत्यमूर्त्तिः स्मृतः। तस्य प्रवृत्त्याख्या मूर्त्तिर्निवृत्याख्यश्च सञ्जन्म गिरः। एतस्मादेव कथायाः सम्भूतिरभवत्। एष जगतः प्रथम इतिहासः।

चतुःपञ्चाशाध्याये भद्राश्वेन पृष्टं हे द्विज विज्ञानोत्पत्तिकामस्य क आराध्यः, कथञ्च स आराध्यते इति। अथागस्त्येनोक्तम, सर्व्वैरपि देवैर्विष्णुरेव सदाराध्यः। येनासौ वरप्रदो भवति तस्योपायं प्रवक्ष्यामि, शृणु। नारायणः परो देवस्तं प्रणम्य न सीदति। श्रूयते च भारतेन पुरा विष्णोस्तुष्टिप्रदं वक्ष्यमाणं व्रतं कथितमित्युक्ता स ऋषिर्विस्तरेण तद्व्रतं कथयामास।

पञ्चपञ्चाशाध्यायेऽपि अगस्त्येनान्यद्विष्णुप्रीतिकरं व्रतं कथितवान्। कथितवांश्च किञ्चित्स्तोत्रम्। षट्पञ्चाशाध्याये धन्यव्रतं, सप्तपञ्चाशाध्याये कान्तिव्रतं, अष्टपञ्चाशाध्याये सौभाग्यकरणं व्रतं, ऊनषष्टितमाध्याये विघ्नहराख्यं व्रतं, षष्टितमाध्याये शान्तिव्रतं, एकषष्टितमाध्याये कामव्रतं, द्विषष्टितमाध्याये आरोग्यव्रतं तत्र च सार्व्वभौमनृपतिवृत्तं, त्रयःषष्टितमाध्याये पुत्रप्राप्तिव्रतं, चतुःषष्टितमाध्याये शौर्य्यव्रतं, पञ्चषष्टितमाध्याये सार्व्वभौमव्रतं सप्रयोगानुक्रमं कथितम्। षट्षष्टितमाध्यायारम्भे भद्राश्वेन पृष्टं, भगवन् किमप्याश्चर्य्यं दृष्टं नवेति। अगस्त्येनोक्तं, एष भगवाञ्जनार्द्दन एव आश्चर्य्यरूपः, तत्रैव

विविधान्याश्चर्य्याणि दृष्टानि। हे पार्थिव कदाचिन्मुनिर्नारदः श्वेतद्वीपं गतस्तत्र तिग्मतेजसो बह्वन् शङ्खचक्रधरान् पुरुषानपश्यत्। तान् दृष्ट्वा तस्य कोऽत्र विष्णुरिति चिन्ता बभूव। एवं चिन्तयतस्तस्य कथं शङ्खचक्रगदाधरमाराधयामीति पुनश्चिन्ता बभूव। एवं चिन्तयतस्तस्य दिव्यं वर्षसहस्रं गतम्। ततोविष्णुः परितोषं जगाम। प्रसन्नः प्रत्यक्षतां गतश्च प्रोवाच, भो ब्रह्मसुत ब्रूहि किन्ते ददामीति। नारद उवाच, भो भगवन् यदि तुष्टोऽसि त्वत्प्राप्त्युपायं ब्रूहि। तदाकर्ण्य नारायणेन स उपायः कथितः।

सप्तषष्टितमाध्यायारम्भे भद्राश्वेन पृष्टं, जगति सितकृष्णे ये द्वे स्त्रियौ बभूवतुः, तत्र का सिता, का कृष्णा च, कश्चासौ पावकः पुरुषः सप्तधाऽभवत्, कोऽसौ षट्शिराः द्विदेहश्च पुरुषो द्वादशधाऽभवत्, किञ्च दाम्पत्यं कस्माच्चैतज्जगज्जातम्। अगस्त्य उवाच, सितासिता द्विवर्णा नारी रात्रिरुदाहृता, यः पुमान् सप्तधा जात एको भूत्वा नरेश्वरः स समुद्रः, यश्च द्वादशधा द्विदेहः षट्शिराश्च सोऽसौ संवत्सरः, दाम्पत्यं तदहोरात्रं, ततो जगत्समुत्तस्थौ। स हि विष्णुः परमो देवः, वेदक्रियाहीनो मनुष्यो न हि तं परमं देवं पश्यति।

अथाष्टषष्टितमाध्यायारम्भे भद्राश्वेन पृष्टं, योऽसौ सर्व्वगतो देवः परमात्मा चतुर्युगे स परमेश्वरः केन केनोपायेन ज्ञायते, युगे युगे वर्णानां कीदृगाचारश्च भविता, अन्यस्त्रीसङ्गे विप्राणाञ्च कीदृशी शुद्धिर्भवितेति। ततोऽगस्त्य उवाच, सत्य-

युगे मही देवैर्वेदकर्म्मणा युज्यते, त्रेतायुगे यज्ञकर्म्मणां विस्तरः कृतः, द्वापरे यावद्धर्म्मपुत्रो युधिष्ठिरः स्थास्यति तावत्सत्त्वरजसो-र्बाहुल्यं भविष्यति, ततस्तमःप्रधानः कलिः प्रादुर्भविष्यति। तस्मिन् कलौ ब्राह्मणाः, क्षत्रियाः, वैश्याः, शूद्राश्च स्वमार्ग-च्युता हीनजातयो भविष्यन्ति। सर्व्वे ते सत्यशौचहीना भवेयु-स्ततो लोकोऽयं वर्णधर्म्मश्च विनङ्क्ष्यति। ततो भद्राश्वेन अगम्यागमनस्य प्रायश्चित्तं पृष्टमगस्त्येन च गम्यागम्यविवेक-पुरःसरं तत्कथितम्।

ऊनसप्ततितमाध्यायारम्भे भद्राश्वेन अगस्त्यस्य स्वशरीरवृत्तं पृष्टम्। अगस्त्येन कथितं यथा मम शरीरमिदं बहुकल्पस्थायि। कदाचिदहं सर्व्वां महीमटन् मेरोः पार्श्वे व्यवस्थितमिलावृतं नाम वर्षं गतवान्। तत्र रम्यं सरोदृष्टं, तस्य च तीरे महा-कुटी दृष्टा, तत्रोपवासशिथिलमस्थिचर्म्मावशेषं चीरवल्कल-धारिणन्तापसं दृष्टवान्। मया स आतिथ्यं याचितः प्राह— ब्रह्मन् स्थीयतामातिथ्यं ते करवाणि। एतद्वच आकर्ण्याहं तां कुटीं प्रविष्टः तञ्च तापसं स्वतेजसा ज्वलन्तमिव दृष्टवान्। अथाऽसौ मां भूतलोपविष्टं दृष्ट्वा हुङ्कारमकरोत्, तद्धुङ्कारात् पञ्च कन्यकाः पातालं भित्त्वोत्तस्थुः, तासामेकस्या मस्तके काञ्चनपीठमेकमासीत्। सा मह्यं पादोदकं प्रादात्। अहञ्च तदुदकं गृहीत्वा पादौ क्षालितुमुपक्रान्तवान्। ततोऽन्ये द्वे मत्पार्श्वे स्थिते व्यजनञ्चक्रतुः। ततः स महातपाः पुनरेव हुङ्कारमकरोत्। तच्छब्दानन्तरं काचिद्योजनविस्तृतां हैमद्रोणीं

गृहीत्वागत्य तस्मिन् सरसि प्लावं चकार। तस्याञ्च द्रोण्यां शतशो हेमकुम्भकराः कन्या आययुः, ता दृष्ट्वा स मुनिर्मां प्राह हे ब्रह्मन् तव स्नानार्थमिदं कल्पितं, ततस्त्वमिमां द्रोणीं प्रविश्य स्नातुमर्हसीति। ततोऽहं तस्य वचनात्तस्यां द्रोण्यां यावद्विशामि तावत्सा द्रोणी सरसि ममज्ज। जले मग्नोऽहं मेरुगिरेर्मूर्द्ध्नि स्थितमात्मानं दृष्टवान्, दृष्टवांश्च तत्रैव सप्त समुद्रान्, सप्त कुलपर्व्वतान्, सप्तद्वीपवतीं पृथ्वीञ्च। अद्यापि तं लोकं स्मरामि। हे राजन् पूर्व्वं मम शरीरे यद्वृत्तं तत्कथितं किमन्यच्छ्रोतुमिच्छसीति।

सप्ततितमाध्यायारम्भे भद्राश्वः पप्रच्छ, भगवन् तं लोकं दृष्ट्वा तत्राश्चर्यं भवता किं व्रतं, कीदृक्तपः, कीदृशो वा धर्म्मोऽनुष्ठित इति। अगस्त्येनोक्तम् हरेराराधनामन्तरा न शुभलोकप्राप्तिर्भवतीति मनसा सञ्चिन्त्य मया भूरिदक्षिणैः क्रतुभिर्वर्षशतं स सनातनो विष्णुराराधितः। बहुना कालेन जनार्द्दनं यजतो मे सकाशं कदाचित्सवासवा देवाः सममेव समागताः। यावच्च ते देवाः स्वस्मिन् स्वस्मिन् स्थाने व्यवस्थितास्तावद्देवो वृषभध्वजश्च तत्र समागतः। तान् सर्व्वानागतान् दृष्ट्वा ब्रह्मपुत्रः सनत्कुमारो महायोगी त्रसरेणुप्रमाणे सूर्य्यसन्निभे विमाने समवस्थितस्तत्र समाजगाम। स हि भूतभवद्भविष्यविन्महर्षिर्देवं भगवन्तं रुद्रं शिरसा प्रणनाम। ततस्तान् सर्व्वानहमुक्तवान् भवतां को याज्यो वरिष्ठश्चेति। ततो भगवान् रुद्रो मामुवाच नारायण एव सर्व्वेषां वरिष्ठो याज्य-

श्चेति । एवमुक्तासौ विस्तरेण तस्य माहात्म्यं कथयामास ।

एकसप्ततितमाध्याये अगस्त्येन उक्तं ततो यावदहं तं देवं रुद्रं प्राणमम् तावत्तस्यैव हृदये स्थितं कमलासनं नारायणञ्च देवमद्राक्षम्. ददृशुश्चापरे तत्र समेताः सर्व्वे । ततो विस्मितास्ते सर्व्वे जयशब्दं चक्रुः । ततो रुद्र उवाच, पश्यत यूयं मामुद्दिश्य हुतं हव्यं वयं त्रय एव गृह्णीमः, नास्माकं पृथग्भावो वर्त्तते । रुद्रेणैवमुक्ते तत्र समागता मुनयस्तं मोहशास्त्रप्रयोजनं पप्रच्छुः। ततो महादेवेन तत्प्रयोजनं विवृतं, तदवसरे च गोदावर्य्या उत्पत्तिस्तत्र गोदानफलञ्च विवृतम् ।

द्विसप्ततितमाध्यायारम्भे वराहेणोक्तम्, अथ महर्षि-रगस्त्यः सर्व्वज्ञं सर्व्वकर्त्तारं पुरातनं देवं परमेश्वरं रुद्रं प्रणम्य पप्रच्छ, भवान् ब्रह्मा च विष्णुश्चेति त्रयं त्रयीति स्मर्य्यते, परं कस्मिन् काले भवतः प्राधान्यं, कस्मिन् विष्णोः, कस्मिन् वा ब्रह्मण एतन्मां ब्रूहीति । ततो रुद्रेणोक्तं विष्णुरेव परं ब्रह्म, स एव वेदत्रयं प्रतिपद्यते, मुग्धास्तु तत्स्वरूपं न जानन्ति । विश् प्रवेशने इत्यस्माद्धातोः नुप्रत्ययेन विष्णुरिति पदं सिद्धमर्थस्तु सनातनः परमात्मा, स दशधा चैकधा च कीर्त्त्यते, स योगैश्वर्य्य-समन्वित आदित्यरूपी च । स युगे युगे मनुष्यभावमाश्रित्य देवकार्य्याणि कुरुते, मां स्तौति च । अहञ्च तौ विष्णुब्रह्माणौ स्तौमि । सृष्टिकालेऽहं चतुर्वक्तं स्तौमि, ब्रह्मा च मां कल्पे युगे स्तौति । लिङ्गमूर्त्तिञ्च मां देवा यजन्ते । मुमुक्षवस्तु यं सहस्रशीर्षकं देवं यजन्ते स स्वयं विश्वात्मा नारायणः । हे

द्विजोत्तम ये तु नित्यं ब्रह्मयज्ञेन यजन्ते, ते ब्रह्माणं प्रीणयन्ति, वेदो हि ब्रह्म प्रकीर्त्यते। नारायण शिव विष्णु शङ्कर पुरुषोत्तमेत्येतैर्नामभिः परं ब्रह्मैव प्रकीर्त्यते। अहं विष्णुस्तथा वेदा ब्रह्म कर्म्माणि च एतत्सर्व्वमेकमेव, सुधीर्नैतानि पृथग्भावयेत्। यस्त्वन्यथा भावयति स नरकं प्रयातीति।

त्रयःसप्ततितमाध्याये रुद्रेणादित्यवृत्तकथनपुरःसरं विष्णुमाहात्म्यं कथितम्।

चतुःसप्ततितमाध्यायारम्भे वराहेणोक्तम्, पुनस्ते मुनयस्तं पुराणपुरुषं शूलपाणिनं देवं रुद्रं पप्रच्छुः, हे देवदेव अस्मभ्यं कृपया भूमेः प्रमाणं पर्व्वतानाञ्च संस्थानं, ब्रूहीति। ततो रुद्रेणोक्तमाकर्ण्यताम्, अहमिदानीं समासात् क्ष्मातलस्य प्रमाणादिकं वर्णयामि। ततो रुद्रेण सृष्टेरारभ्य पृथिव्या उत्पत्तिं, विभागान्, संस्थानानि च कथितानि, कथितानि च तत्तद्विभागविशेषाधिपतीनां नामधेयानि।

पञ्चसप्ततितमाध्याये भगवता रुद्रेण जम्बूद्वीपस्य सविस्तरं विवरणं कथितम्।

षट्सप्ततितमाध्याये दिक्पालानां नगराणि वर्णितानि।

सप्तसप्ततितमाध्याये मेरुसन्निहितानां कतिपयपर्व्वतानां विवरणं कथितम्।

अष्टसप्ततितमाध्याये यथाक्रमं चैत्ररथादिशैलचतुष्टयस्य वर्णनमस्ति।

ऊनाशीतितमाध्यायेऽपि सीतान्तप्रभृतीनां केषाञ्चित्पर्व्व-

तानां कीर्त्तनमस्ति। एवमूननवतितमाध्यायं यावत् भुवनकोशस्य सविस्तरं वर्णनमस्ति।

नवतितमाध्याये तु पुनर्धरण्या वराहमूर्त्तिर्देवः पृष्टस्त्रयाणां ब्रह्मविष्णुमहेश्वराणां कतमो देवः परः, कतमश्चापर इति। ततो वराह उवाच, नारायणो देवः सर्व्वेभ्यः परस्तस्माच्चतुर्मुखोऽभवत्, तस्माच्च रुद्रो जात इति। तस्य रुद्रस्य बह्वन्याश्चर्य्याणि चरितानि सन्ति। हे चार्व्वङ्गि! मया कथ्यमानानि तानि सर्व्वाणि शृणु। एकदा स रम्ये कैलासशिखरे गणैः परिवृतो देव्या सह क्रीड़न् यावदास्ते, तावत् ब्रह्मा तत्र समाजगाम। ततो महादेवेनागमनप्रयोजनं पृष्टो ब्रह्मोवाच, अस्त्यन्धको नाम महादैत्यस्तेनार्द्दिता दिवौकसो मां शरणं प्राप्ताः। ततोऽहं किञ्चित्प्रतिकर्त्तुमक्षमस्तैः सार्द्धमत्रागतः। ततस्ते ब्रह्मविष्णुमहेश्वरा एकत्र संस्थिताः सूक्ष्मदृष्ट्या वीक्षाञ्चक्रुः। ततस्तेषां त्रिधा दृष्टिरेका समजायत। तस्यां दृष्ट्यां काचिद्दिव्यरूपिणी कुमारी समजायत। अथ तां कुमारीं दृष्ट्वा ब्रह्मविष्णुमहेश्वराः प्रोचुः, हे शुभे! काऽसि किं वा ते कार्य्यं ब्रूहि। सा उवाच, किं मां न वेत्थ, अहं हि भवतां शक्तिः परमेश्वरीति। तदाकर्ण्य ब्रह्मादयः प्रोचुस्त्रिभिर्वर्णैर्मूर्त्तित्रयं कुर्व्वित। ततः सा सिता, रक्ता, कृष्णा चेति त्रिधाऽभवत्। या तस्याः सिता मूर्त्तिः सा ब्राह्मी, तया सृष्टिं विदधाति। या रक्ता सा वैष्णवी, तया जगत्पालयति। या च कृष्णा सा रौद्री, तया जगत्संहरति। ततः सिता

कुमारी ब्रह्माणमामन्त्र्य तपस्तप्तुं श्वेतपर्व्वतं ययौ। रक्ता च केशवं समनुज्ञाप्य दुश्चरं तपस्तप्तुं मन्दराद्रिं जगाम। कृष्णा पुना रुद्रमाभाष्य नीलपर्व्वतं तपस्यार्थं गतवती। ततः सृष्टि-काले सृष्टिरूपिणी सा ब्रह्मणा स्मृता श्वेतपर्व्वतादागत्य सृष्टिं वर्द्धयामास।

एकनवतितमाध्याये तस्या एव प्रभावो वर्णितः।

द्विनवतितमाध्याये वैष्णव्या तपःप्रभावेण रम्यं पुरं निर्म्मितं, तत्र साऽप्सरसां गणैः परिवृता विहरति स्म। अथै-कदा नारदस्तां दृष्ट्वा तस्या रूपं महिषासुराय कथितवानिति कथा विद्यते।

त्रयोनवतितमाध्याये महिषासुरो नारदमुखात्तस्या देव्या-रूपं समाकर्ण्य रहो मन्त्रिभिस्तां वशीकर्त्तुमुपायञ्चिन्तयित्वा प्रथमं कञ्चिद्दूतं प्रेषयामास। देवानां विजयार्थोद्यमञ्चकार चेति कथा विद्यते।

चतुर्नवतितमाध्याये ससैन्यो महिषासुरो देवाञ्जिगायेति वर्णितमस्ति।

पञ्चनवतितमाध्याये देव्या ससैन्यो महिषासुरो निहत-इति वर्णितम्। इयं हि महिषासुरकथा देवीमाहात्म्योक्त-महिषासुरकथातः सम्यग्भिन्नैव।

षण्णवतितमाध्याये नीलगिरौ तपः कुर्व्वन्त्या संहार-कारिण्याः कृष्णाया माहात्म्यं वर्णितं, यथा कदाचिद्रुरुर्नाम कश्चित्समुद्रमध्यवासी दैत्यः देवान्निर्ज्जित्य पीड़यामास। तेन

क्षुभिता देवा नीलगिरौ तपश्चरन्तीं तां देवीं शरणं ययुः । अथ सा देवैरावेदितं भयकारणमाकर्ण्योच्चैर्जहास, हसन्त्यास्तस्या वक्त्रात्, बह्व्यो देव्यो विनिर्ययुः । ततस्ताः सर्व्वाः कोटिशो देव्यो देवीं संवेष्ट्य दानवैः सार्द्धं युयुधिरे । क्षणेन च तत्सर्व्वं दानवबलं ताभिर्निहतम् । ततस्ता देव्यः क्षुधाभिभूताः किञ्चिद्भक्ष्यं प्रार्थयामासुः । रुद्रेण तु ताभ्यो भक्ष्यं प्रदत्तम् । ततो रुद्रेण देव्याः स्तवः कृतः, स्तोत्रमाहात्म्यञ्च कथितम् ।

सप्तनवतितमाध्याये वराहेण रुद्रोत्पत्तिः कथिता । यथा ब्रह्मणा रुद्रः सृष्टः स्वस्कन्धे कृतः कपालिन्नित्यामन्त्रितोऽसौ क्रुद्धो ब्रह्मणः शिरश्चकर्त्त । तच्च निकृत्तं शिरस्तस्य हस्तलग्नं बभूव । ततः स कथं तच्छिरः करात्पतेदिति ब्रह्माणमब्रवीत् । ब्रह्मणोक्तमिदं कापालिकव्रतं चर इति । अथ द्वादशाब्दान्यावत्तत्कपालं गृहीत्वा परितः पृथिवीं भ्रमतस्तस्य वाराणस्यां सीमाकारिगणैस्तद्धस्तात् बलात्कारेण भुवि कपालं पातितं, ततस्तत्कपालमोचनं नाम त्रैलोक्यविश्रुतमघापहञ्च तीर्थं जातम्, तत्र ब्रह्महाऽपि नरो विशुद्धिमाप्नोति । ततो रुद्रहस्तात्कपालमोचनमाकर्ण्य ब्रह्मा तत्रागत्य मधुरवचनैः रुद्रं परिसान्त्वयामास ।

अष्टनवतितमाध्यायारम्भे धरणी भगवन्तमादिदेवं वराहं पप्रच्छ, योऽसौ सत्यतपा नाम लुब्धो भूत्वा द्विजो बभूव, तस्योपरि महच्चित्रं भविष्यतीति त्वया कथितं,सम्प्रति कीदृशं तस्मा-

माचक्ष्वेति। वराह उवाच, स हि सत्यतपाः पूर्व्वं भृगुवंशोद्भवो द्विज आसीत्, दस्युसंसर्गात्तु दस्युवत्तमजायत। ततश्च महता कालेन ऋषिसङ्गाद्दुर्व्वाससा विशेषतो बोधितश्च द्विजत्वं प्राप। ततोऽसौ हिमाद्रेरुत्तरे पादे पुष्पभद्राया नद्यास्तीरे स्थितायां दिव्या-नाम-चित्रशिलायां स्थित्वा तपश्चकार। स कदाचित्कुठारेण समिधश्चकर्त्त, चिच्छेद चास्य वामतर्ज्जनीं, छिन्नायां तस्यां केवलं भस्मचूर्णमदृश्यत न मांसं, न रुधिरं, न वा मज्जा दृश्यते स्म। अथ तेन संयोजिता सा अङ्गुली पूर्व्ववदभवत्। तत्पार्श्वे भद्रवटो नाम कश्चिन्महान्यग्रोधपादप आसीत्तत्र तस्यां रात्रौ किन्नरमिथुनमेकं न्युवास, तत्तु तदद्भुतमालोक्य प्रभाते इन्द्रलोकं जगाम। अथेन्द्रेण सर्व्वे सुरा यक्षगन्धर्व्वकिन्नराश्च पृष्टाः किञ्चिदाश्चर्य्यं दृष्टं चेद्भवद्भिः कथ्यतामिति, ततो रुद्रसरस्तीरे यद्वृत्तं किन्नरमिथुनेन तत्कथितम्। तच्छ्रुत्वा शक्रः सहसा विस्मितो विष्णुमब्रवीत् विष्णो आगच्छ किन्नरमिथुनेन यदपूर्व्वमाश्चर्य्यं कथितं तद्द्रष्टुं हिमवत्पार्श्वं गच्छाव इति। एवमुक्तो विष्णुर्वाराहरूपमग्रहीत्, शक्रश्च मृगयुरूपम्। ततस्तौ तमृषिं प्रति जग्मतुः। तत्र गत्वा विष्णुर्वाराहरूपेण ऋषिदृष्टिपथे कदाचिद्दृश्यः कदाचिच्चादृश्यो भूत्वा यावत्तिष्ठति स्म, तावत्तीक्ष्णसायकखड्ग-धनुष्पाणिरिन्द्र आगत्य सत्यतपसमृषिमुवाच, भगवन् त्वया कश्चित् पृथुलो महान्वराहो दृष्टश्चेत्कथय येन भृत्यानां पोषणाय तं निहन्मि। एवमुक्तो मुनिश्चिन्तयामास यदि तमस्मै

दर्शयामि तदा हन्यते, नो चेदस्य कुटुम्बः सीदति। लुब्धकोऽयं जायापुत्रसमन्वितः क्षुधार्त्तो वर्त्तते, वराहश्च ममाश्रमं शरणमुपागतः एवं स्थिते किं कार्य्यमिति। ततः किं कर्त्तव्यमिति चिन्तयतस्तस्य क्षणाद्बुद्धिरजायत। सोऽब्रवीत्—

"दृष्टं चक्षुर्निहितं जङ्गमेषु
जिह्वा वक्तृ मृगयो तद्विसृष्टम्।
दृष्टृ चक्षुर्नास्ति जिह्वेह वक्तृ
जिह्वायाः स्यात्तस्वतोऽस्तीह चक्षुः॥"

एतच्च आकर्ण्य तौ तुष्टौ स्वमूर्त्तिं दर्शयन्तौ वाक्यच्छेदमूचतुर्वरं ब्रूहि वत्स। ततोऽसौ द्वौ वरौ प्रार्थयामास। एकेन विप्रानभियुक्तां विप्राणां मासेन पापविमोचनं, द्वितीयेन निजस्य मुक्तिरिति याचितवान्। तौ च देवौ तथेत्युक्त्वाऽन्तर्हितौ। वरं लब्ध्वा सत्यतपाः कृतकृत्यो ब्रह्मभूतश्च यावदास्ते तावत्तस्य गुरुरारुणिः समदृश्यत। ततस्तेनाऽसौ पूजितः स्वशिष्यं सिद्धं ज्ञात्वा पुरतः स्थितं प्राञ्जलिं विनयापन्नं तमुवाच। हे पुत्र तपसा सिद्धोऽसि, ब्रह्मभूतोऽसि, तदिदानीमुत्तिष्ठ मया सार्द्धं मुक्तिपदं गम्यताम्। ततस्तौ नारायणं देवं ध्यात्वा लयं गतौ।

नवनवतितमाध्यायारम्भे धरण्युवाच, या सा मायाऽव्यक्तजन्मनो ब्रह्मणः शरीरान्निर्गताऽष्टभुजा गायत्री भूत्वा वेत्रासुरेण सहाऽयुध्यत, सैव देवी देवकार्य्यचिकीर्षया ब्रह्मणेरिता महिषाख्यासुरस्य वधं कुर्व्वती कथं वैष्णवीत्याख्यां प्राप्ता तन्मे

कथयेति। वराह उवाच, इयं जगद्धिता देवी शङ्करप्रिया गङ्गा सर्व्वं वेद। स्वायम्भुवे मन्वन्तरे वैष्णव्या मन्दरे गिरौ महिषाख्यो दैत्यो हतः पश्चाच्चैत्रासुरश्च निहतः। नन्दया विन्ध्याचले महाबलपराक्रमो महिषो निहतः। अथवा सा ज्ञानशक्तिः महिषस्तु मूर्त्तिमदज्ञानं, अज्ञानं ज्ञाननाश्यमित्यत्र सन्देह एव नास्ति। मूर्त्तिपक्षे चेतिहासममूर्त्ते चैक्यमेव वेदवाक्यैरिदानीं पञ्चपातकनाशनं देवदेवस्य विष्णोः पुत्रवसुप्रदं पूजाप्रकारं शृणु—यः खल्विह जन्मनि दारिद्र्यव्याधिकुष्ठादिपीड़ितोऽपुत्रश्च भवति, स चेन्मण्डलगतं देव्या सह देवं नारायणं पश्यति, तस्य सद्य आयुर्वित्तं सुतः सुखञ्च सञ्जायते। ततस्तस्य पूजाप्रकाराः पूजनकालाश्च कथिताः। ततो वसिष्ठस्य श्वेतस्य च राज्ञः संवादोऽन्नदानफलञ्च कथितम्। ततस्तिलधेनुदानविधिस्तत्-फलञ्च कथितम्।

शततमाध्याये जलधेनुदानविधिस्तत्फलञ्चोक्तम्।

एकाधिकशततमाध्याये रसधेनुदानविधिस्तत्फलञ्चाभि-हितम्।

द्व्यधिकशततमाध्याये गुड़धेनुदानविधिस्तत्फलञ्चोक्तम्।

त्र्यधिकशततमाध्याये शर्कराधेनुदानविधिस्तत्फलञ्चोक्तम्।

चतुरधिकशततमाध्याये मधुधेनुदानविधिस्तत्फलञ्च कथि-तम्।

पञ्चाधिकशततमाध्याये क्षीरधेनुदानविधिस्तत्फलञ्चोक्तम्।

षड़धिकशततमाध्याये दधिधेनोर्विधानं, सप्ताधिकशत-

तमाध्याये नवनीतमयधेनो—र्ष्टाधिकशततमाध्याये लवणधेनो-र्नवाधिकशततमाध्याये कार्पासधेनो-र्दशाधिकशततमाध्याये धान्यधेनो-रेकादशाधिकशततमाध्याये कपिलाधेनोर्दानविधानञ्चोक्तम् ।

द्वादशाधिकशततमाध्याये प्रसूयमानाया धेनोर्दानविधानमुक्तमन्ते च वराहपुराणस्य माहात्म्यमष्टादशपुराणानि च नामतः कीर्त्तितानि ।

त्रयोदशाधिकशततमाध्याये सनत्कुमारेण पृष्टा धरणी भगवतो नारायणस्य माहात्म्यं कथयामास । कथयामास च प्रलयसमये गुरुभारपीड़िताऽहं कञ्चिदपि सहायमलभमाना भगवन्तं नारायणं शरणं गता ।

चतुर्दशाधिकशततमाध्यायारम्भे नारायणः प्रसन्नो वसुन्धरां प्रत्युवाचाऽहं त्वां सशैलवनकाननां ससागरां सद्वीपाञ्च धारयिष्यामीति कथा वर्त्तते । ततो नारायणो वाराहं रूपमास्थाय वामया दंष्ट्रया मेदिनीमुज्जहार । ततः पृथिवी नारायणं प्रति बहून् प्रश्नानकरोत् यथा, कीदृश आचारः, काले काले कीदृशः कर्मणः कीदृश उपयोगश्चेत्यादि ।

पञ्चदशाधिकशततमादष्टादशाधिकशततमाध्यायान्तं यावद्वराहरूपिणा भगवता कर्मणां शुभाशुभानां स्वरूपाणि फलानि प्रायश्चित्तानि च कथितानि ।

ऊनविंशत्यधिकशततमाध्याये प्रथमं धरणी पप्रच्छ, केन प्रकारेण संयुक्तस्तव प्रापणकविधिर्भवतीति तन्मां कथयेति ।

ततः प्रीतमानसो वराहः प्रत्युवाच कथयामास च येन प्रकारेण प्रापणं भवति ।

विंशत्यधिकशततमाध्याये वराहेण विष्णुपूजाविशेषविधानं कथितम् ।

एकविंशत्यधिकशततमाध्याये वराहेण पुनर्ज्जन्मनिवर्त्तको विष्णुपूजाविशेषप्रकारः कथितः ।

द्वाविंशत्यधिकशततमाध्यायस्यादौ वराहेण येन सर्व्वपापविमुक्तिर्भवति तदुपायाः कथिताः । तेषु च कोकामुखमरणमन्यतम उपाय इति कथिते धरण्या वराहः पृष्टः, कथं वाराणसीप्रभृतीनि तीर्थानि विहाय कोकायाः प्राशस्त्यं निर्दिष्टमिति । तथैवं पृष्टः स वराहरूपी भगवान्तां वसुन्धरां प्रत्युवाच, वाराणसीप्रभृतीनि रुद्रक्षेत्राणि, कोका तु साक्षाद्भगवतः क्षेत्रमन्यच्च कदाचित् श्येनमुखात्कोकायां पतितो मत्स्यो राजपुत्रो बभूव । काचिद्व्याधविद्धा चिल्लिका तत्र निपतिता परमशोभना राजपुत्री सञ्जाता । तयोश्च परस्परं विवाहोऽभवत् । ताभ्यां परमसुखेन च बहुतिथः कालोऽतिवाहितः । ततः कदाचिद्राजपुत्री शिरःपीड़ाकुलं राजपुत्रमुवाच कथं ते पीड़ा नानाविधैरप्युपायैर्नोपशाम्यति । राजपुत्रस्तु मानुषत्वमेव सर्व्वव्याधीनां कारणमित्युवाच । सा तु न किञ्चिद्बुबुधे । ततस्तया निर्बन्धतः पृष्टः कोकमुखं गत्वा सर्व्वं कथयिष्यामीत्युवाच । तत्र राजपुत्रः स्वपूर्व्वजन्मवृत्तं कथयित्वा तस्यै स्वास्थीन्यवशिष्टानि दर्शयामास । साऽपि स्मृतपूर्व्वजन्मवृत्ता निज-

पूर्व्वजन्मवृत्तञ्च तस्मै कथयित्वा निजास्थीनि दर्शयामास। ततस्तौ शुभानि कर्म्माणि कृत्वा मानुषं भावं परित्यज्य श्वेतद्वीपमुपागतौ। कोकाया एवं खलु प्रभावः।

चयोविंशत्यधिकशततमाध्याये प्रथमं कोकामाहात्म्यश्रवणेन विस्मितया पृथिव्या पृष्टो भगवान् वराहः, हे भगवन् कोकामाहात्म्यं श्रुतं मया, सम्प्रति केन धर्म्मेण कर्म्मणा तपसा वा मानवास्त्वां पश्यन्तीति वेदितुमिच्छामि प्रसन्नो निखिलं मां वक्तुमर्हसि। एवं पृष्टो देव्या पृथिव्या वराहस्तत्सर्व्वं वक्तुमुपचक्रमे। कथयामास च क्रमेण तत्सर्व्वम्। षड़ृतुकर्त्तव्यानि च कर्म्माणि कथितानि। चतुरधिकशततमाध्यायेऽपि तदेव वृत्तमस्ति।

पञ्चविंशत्यधिकशततमाध्याये पृथिव्या मायास्वरूपं पृष्टो भगवान् वराहः सविस्तरं तत्कथयामास। कथितानि च तेन तत्सम्पृक्तानि वृत्तानि।

षड्विंशत्यधिकशततमाध्याये धरणी वराहं कुब्जाम्रकनामकतीर्थस्य माहात्म्यं पप्रच्छ, वराहश्च कुब्जाम्रतीर्थस्य व्युत्पत्तिं माहात्म्यं तद्गतमितिवृत्तञ्च कथयामास।

सप्तविंशत्यधिकशततमाध्याये धरण्या वराहो मोचकारणं धर्म्मं दीक्षाञ्च पृष्टो ब्राह्मणानां धर्म्मान्दीक्षाविधिञ्च कथयामास।

अष्टाविंशत्यधिकशततमाध्याये वराहेण यथारूपं क्षत्रियवैश्यशूद्राणां धर्म्मा दीक्षाविधिश्च कथिताः।

ऊनत्रिंशदधिकशततमाध्याये वराहेण तिलकदानक्रमः,

ताम्रमाहात्म्यं तदुत्पत्तिकथा, दीक्षितानां सन्ध्योपासना-प्रकारादयश्च कथिताः ।

त्रिंशदधिकशततमाध्याये धरण्या अपराधास्तन्निवृत्त्युपाय-प्रायश्चित्तानि कीदृशानीति पृष्टो वराहस्त्रिंशदधिकशततमा-दारभ्य षट्त्रिंशदधिकशततमाध्यायं यावदेकैकमपराधं तन्नि-वारणप्रायश्चित्तानि च कथयामास ।

सप्तत्रिंशदधिकशततमाध्याये धरण्या किं व्रतं शुभं कनरश्च भक्तसुखावहं चेत्रमिति पृष्टो वराह उवाच । कोकामुखं, कुब्जाम्रकं तथा सौकरवञ्चेत्येतानि भागवतप्रियाणि पराणि स्थानानि । एतेषु च सौकरं स्थानं श्रेष्ठं सर्व्वसंसारमोक्षणञ्च यत्र संस्था त्वं रसातलादुद्धृतासि, यत्र भागीरथी प्रतगा च वर्त्तते । ततः पृथिवी पुनः पप्रच्छ, सौकरवे मृता मनुष्याः केषु केषु लोकेषु यान्ति, तत्र स्नातस्य पिवतश्च किं पुण्यं भवति, कानि वा तत्र तीर्थानि एतत्सर्व्वं वक्तुमर्हसीति । ततो वराहः क्रमेण सर्व्वं प्रत्युवाच, कथयामास च प्रसङ्गगता-नीतिवृत्तानि ।

अष्टात्रिंशदधिकशततमाध्याये धरणी पप्रच्छ, सौकरवे चेत्रे गायतो वादयतो नृत्यतो जाग्रतश्च किं पुण्यं, किञ्च गोदानस्य, जलदानस्य, सम्मार्ज्जनस्य, लेपनस्य, गन्धपुष्पधूपदीपनैवेद्यादि-दानस्य च किं फलं, जपयज्ञादिना कर्म्मणा वा का गतिः प्राप्यते इति । एवं पृथिव्या वचः श्रुत्वा वराहः क्रमेण सर्व्वं प्रोवाच ।

ऊनचत्वारिंशदधिकशततमाध्याये च पूर्व्वप्रश्नविषयिण्येव कथा वर्त्तते ।

चत्वारिंशदधिकशततमाध्याये धरणी पप्रच्छ, हे देव त्वं कस्मिन् स्थाने नित्यं तिष्ठसि, कस्मिन् स्थाने वा कृतं कर्म्म उत्तमायै गतये भवतीति । वराहस्तु कोकामुखमेव निर्दिदेश । ततो धरण्या पृष्टं, कथं कोकामुखं श्रेष्ठमिति । वराहस्तदपि कथयामास । एवं क्रमेण धरण्या पृष्टो वराहः कोकामुख-गतानि सर्व्वाणि गुह्यानि कथयामास ।

एकचत्वारिंशदधिकशततमाध्याये वदरिकामाहात्म्यं वराहेण कथितम् ।

द्वाचत्वारिंशदधिकशततमाध्याये रजस्वलाकर्त्तव्यानि कथितानि ।

त्रयश्चत्वारिंशदधिकशततमाध्याये वराहेण मन्दारमाहात्म्यं कथितम् ।

चतुश्चत्वारिंशदधिकशततमाध्याये धरणी पुनर्वराहं पप्रच्छ, हे देव यदि मन्दारादपि किमपि श्रेष्ठं स्थानमस्ति तद्वक्तुमर्हसीति । वराह उवाच, अस्ति शालग्रामो नाम स्थानं, ततः शालग्रामस्य स्वरूपं माहात्म्यञ्च वर्णयामास, कथितवांश्च तस्मिन् स्थाने शिवः स्वयं नन्दिरूपेण सालङ्कायनस्य मुनेः पुत्रत्वं प्रापेति ।

पञ्चचत्वारिंशदधिकशततमाध्याये धरण्या पृष्टं, सालङ्काय-नोमुनिस्तत्र मुक्तिप्रदे शालग्रामक्षेत्रे तपः कुर्व्वन् किं चकारेति ।

वराहेणोक्तं, स हि तत्र दीर्घं कालं तपः कुर्व्वन्मम सन्दर्शनं लेभे इति, कथितञ्च ततः शालग्रामान्तर्गतानामन्येषामपि पुण्यक्षेत्राणां माहात्म्यम्।

षट्चत्वारिंशदधिकशततमाध्याये धरण्या पृष्टो वराहः सेतिहासं रुरुक्षेत्रस्य माहात्म्यं सप्तचत्वारिंशदधिकशततमाध्यायं यावद्वर्णयामास।

अष्टाचत्वारिंशदधिकशततमाध्याये स्तुतस्वामीतिविख्यातस्य क्षेत्रस्य माहात्म्यं वर्णितम्।

ऊनपञ्चाशदधिकशततमाध्याये धरण्या पृष्टो वराहो द्वारवतीमाहात्म्यं वर्णयामास।

पञ्चाशदधिकशततमाध्याये धरण्या पृष्टो वराहः सानन्दूरेतिख्यातस्य पुण्यक्षेत्रस्य माहात्म्यं वर्णयामास।

एकपञ्चाशदधिकशततमाध्याये धरणी वराहं पप्रच्छ, यदि सानन्दूरात् परं किमपि गुह्यक्षेत्रं वर्त्तते तद्वक्तुमर्हसीति। वराह उवाच, अस्ति म्लेच्छमध्ये परं गुह्यं समन्तात्पञ्चयोजनं दुर्गमं लोहार्गलं नाम क्षेत्रं तत्राऽहमुदीचीं दिशमाश्रितस्तिष्ठामि। ततस्तन्माहात्म्यं वर्णयामास।

द्वापञ्चाशदधिकशततमाध्याये धरणी लोहार्गलात्परं गुह्यं दुर्लभञ्च तीर्थं श्रोतुमियेष। वराहस्त्र त्रयःपञ्चाशदधिकशततमाध्यायं यावन्मथुरामाहात्म्यं कथयामास।

चतुःपञ्चाशदधिकशततमाध्याये मथुरासन्निहितयामुनतीर्थमाहात्म्यं वर्णितम्।

पञ्चपञ्चाशदधिकशततमाध्याये अक्रूरनामतीर्थस्य माहात्म्यं वर्णितम्, कथितञ्च तत्संश्लिष्टेतिवृत्तम् ।

षट्पञ्चाशदधिकशततमाध्याये वत्सक्रीड़नाख्यतीर्थस्य माहात्म्यं वर्णितम् ।

सप्तपञ्चाशदधिकशततमाध्याये मल्लयार्जुनकादितीर्थानां माहात्म्यं वर्णितम् ।

अष्टापञ्चाशदधिकशततमाध्याये माथुरमण्डलस्य माहात्म्यं वर्णितम् ।

ऊनषष्ठ्यधिकषष्ठ्यधिकशततमाध्याययोः मथुरापरिक्रमण-माहात्म्यं वर्णितम् ।

एकषष्ठ्यधिकशततमाध्याये मथुरान्तर्गतदेववनतीर्थस्य प्रभावो वर्णितः ।

द्विषष्ठ्यधिकशततमाध्याये चक्रतीर्थस्य माहात्म्यं वर्णितम् ।

त्रयःषष्ठ्यधिकशततमाध्याये वैकुण्ठादितीर्थानां माहात्म्यं, कपिलाख्यस्य कस्यचिद्विप्रर्षेरितिवृत्तञ्च कथितम् ।

चतुःषष्ठ्यधिकशततमाध्याये गोवर्द्धनक्षेत्रस्य माहात्म्यं वर्णितम् ।

पञ्चषष्ठ्यधिकशततमाध्याये मथुरान्तर्गतचतुःसामुद्रिक-कूपमाहात्म्यं, तत्संश्लिष्टमितिवृत्तञ्च वर्णितम् ।

षट्षष्ठ्यधिकशततमाध्याये असिकुण्डनामतीर्थस्य प्रभावः कथितः ।

सप्तषष्ठ्यधिकशततमाध्याये मथुरान्तर्गतविश्रान्तिक्षेत्रप्रभावः कथितः ।

अष्टषष्ट्यधिकशततमाध्याये मथुराक्षेत्रस्य चैत्रपालादीनां कथा वर्त्तते।

ऊनसप्तत्यधिकशततमाध्याये मथुरान्तर्गतार्द्धचन्द्रक्षेत्रादीनां माहात्म्यं वर्त्तते।

सप्तत्यधिकशततमात्त्रिसप्तत्यधिकशततमाध्यायं यावत् गोकर्णतीर्थमाहात्म्यं वर्णितम्।

चतुःसप्तत्यधिकशततमाध्याये यामुनसङ्गमप्रभावो वर्णितः।

पञ्चसप्तत्यधिकशततमाध्याये कृष्णगङ्गाकालिञ्जरप्रभावो वर्णितः।

षट्सप्तत्यधिकशततमाध्याये कृष्णगङ्गोद्भवमाहात्म्यं वर्णितम्।

सप्तसप्तत्यधिकशततमाध्याये कृष्णपुत्रस्य शाम्बस्य वृत्तं वर्त्तते। यथा, शाम्बं सुरूपं दृष्ट्वा सर्व्वाः कृष्णपत्नीश्चेतसि क्षोभं प्रापुः। ततो नारदवचनात्कृष्णः शाम्बं शशाप विरूपो भविष्यसीति। शाम्बश्च तत्क्षणात्कुष्ठयुक्तोऽभवत्। ततस्तच्छापविमोचनार्थं नारदेनैव शाम्बायादित्याराधनमुपदिष्टम्। ततः शाम्बो मथुरां गत्वा सूर्य्यस्याराधनं कृतवान्। तेन च तस्य रोगमुक्तिरभवत्। शाम्बश्च तत्र सूर्य्यमूर्त्तिं स्थापयामासेति।

अष्टसप्तत्यधिकशततमाध्याये लवणवधोद्यतशत्रुघ्नकृतद्वादशीव्रतमाहात्म्यं वर्णितम्।

ऊनाशीत्यधिकशततमाध्याये पापप्रायश्चित्तमाहात्म्यं वर्णितम्। अर्थात्कीदृशां पापिनां विष्णुपूजानधिकारः, कथं वा तेषां पापविमोचनं, तत्राधिकारश्च भवतीति कथा वर्त्तते।

अशीत्यधिकशततमाध्याये मथुरान्तर्गतध्रुवतीर्थे पितृश्राद्ध-फलं तत्संसृष्टमितिवृत्तञ्च वर्णितम् ।

एकाशीत्यधिकशततमाध्याये पृथिवी वराहं पप्रच्छ, कथं त्वं शैलकाष्ठमृण्मयधातुप्रतिमासु तिष्ठसीति, वराहश्च क्रमेण काष्ठादिप्रतिमानिर्म्माणप्रतिष्ठापनविधानानि वक्तुमारेभे । तत्र एकाशीत्यधिकशततमाध्याये मधुककाष्ठप्रतिमार्च्चाविधानमुक्तम् ।

द्व्यशीत्यधिकशततमाध्याये शैलप्रतिमार्च्चाविधानम् ।

त्र्यशीत्यधिकशततमाध्याये मृण्मयप्रतिमार्च्चाविधानम् ।

चतुरशीत्यधिकशततमाध्याये ताम्रप्रतिमास्थापनविधानम् ।

पञ्चाशीत्यधिकशततमाध्याये कांस्यप्रतिमास्थापनविधानम् ।

षडशीत्यधिकशततमाध्याये रौप्यसौवर्णप्रतिमास्थापनञ्च कथितम् ।

सप्ताशीत्यधिकशततमाध्याये पितृयज्ञस्य माहात्म्यं सेति-हासं कथितम् ।

अष्टाशीत्यधिकशततमाध्याये प्रेतश्राद्धादिविधानकथा कथिता ।

ऊननवत्यधिकशततमाध्याये केनोपायेन द्विजानां प्रेत-श्राद्धभोजनजनितपापविमोचनं भवेदिति धरण्या पृष्टो वराह-स्तदुपायं राज्ञो मेधातिथेरितिवृत्तञ्च कथयामास ।

नवत्यधिकशततमाध्याये धरणी वराहं पप्रच्छ, हे देव कुत्र पितरः श्राद्धं भक्षयन्ति कथञ्च पिण्डसङ्कल्पं कुर्य्यादिति । ततो वराहः श्राद्धानुष्ठानप्रकारं तत्र कीदृशा ब्राह्मणा भोजनीयाः,

कीदृशाश्च वर्ज्जनीया, इत्यादिकं सर्व्वं विस्तरशः कथयामास।

एकनवत्यधिकशततमाध्याये पृथिव्या पृष्टो वराहो मधुपर्कस्योत्पत्तिं प्रदानप्रकरादिकञ्च कथितवान्।

द्विनवत्यधिकशततमाध्याये शान्तिविधानमुक्तम्।

त्रिनवत्यधिकशततमाध्याये कुरूणां पश्चिमो राजा जनमेजयो वैशम्पायनमुवाच, यमालयः कीदृशः, किंप्रमाणः, किंस्वरूपश्च ; कथञ्च न मे तत्र गतिर्भवेदिति। ततो वैशम्पायनो यमस्य यमालयस्य च वृत्तं वक्तुमारेभे। सा च कथा द्वादशाधिकद्विशततमाध्यायपर्य्यन्तं वर्त्तते। तत्र नरकाणां स्वरूपाणि, पापिनां यातनाश्च विस्तरशोवर्णिताः, पुण्यवतां गतिः शुभाशुभकर्म्मविपाकश्च कथितः।

त्रयोदशाधिकद्विशततमाध्याये ब्रह्मणा सनत्कुमाराय गोकर्णेश्वरमाहात्म्यं कथितम्।

चतुर्द्दशाधिकद्विशततमाध्याये नन्दिकेश्वरवरप्रदानवृत्तं वर्णितम्।

पञ्चदशाधिकद्विशततमाध्याये जलेश्वरमाहात्म्यं वर्णितम्।

षोड़शाधिकद्विशततमाध्याये गोकर्णस्य, तदन्तर्गतशृङ्गेश्वरशैलेश्वरयोश्च माहात्म्यं वर्णितम्।

सप्तदशाधिकद्विशततमाध्याये सूतेन मुनिभ्यो वराहपुराणमाहात्म्यं कथितम्।

अष्टादशाधिकद्विशततमाध्याये वराहपुराणोक्तविषयाणामनुक्रमणी वर्त्तते। अध्यायस्यास्यारम्भे प्रायः सर्व्वेष्वेव परस्पर-

दूरदेशसंगृहीतेष्वप्यादर्शपुस्तकेषु श्लोक एष वर्त्तते—

"त्रिःसप्तषट्क्षितिमिते नृपविक्रमस्य
काले गते भगवतो हरिबोधनस्य ।
वीरेश्वरेण सह माधवभट्टनाम्ना
काश्यां वराहकथितं लिखितं पुराणम् ॥"

श्लोकेऽस्मिन् महद्दुर्भेद्यं रहस्यं वर्त्तते । यद्येतत् पुस्तकविशेष-लिपिसमयमानं, तदा कथं भिन्नदेशीयेषु विभिन्नाक्षरलिखितेष्वपि पुस्तकेष्वस्य सद्भाव इति तु न विज्ञायते ।

# विषयाणां सूची ।


| विषयाः | पृष्ठे | पङ्क्ताम् |
|---|---|---|
| ग्रन्थारम्भः | १ | १ |
| मङ्गलाचरणम् | १ | १ |
| सूतकृतप्रस्तावना | २ | १ |
| पृथिव्याः प्रश्नः | २ | ४ |
| पृथिवीकृतपरमेश्वरस्तुतिः | ५ | २ |
| द्वितीयाध्यायः | ६ | ४ |
| सूतोक्तिः | ६ | ७ |
| वराहेण पुराणलक्षणकथनपूर्व्वकं सृष्टिकथनम् | ६ | १४ |
| आदिसर्गं प्रति पृथिव्याः प्रश्नः | ८ | २ |
| वराहेण विस्तरश्च आदिसर्गकथनम् | ८ | ५ |
| वराहेण रुद्रसनत्कुमारमरीच्यादीनामुत्पत्तिकथनम् | ११ | ११ |
| प्रियव्रतकथा | १२ | २१ |
| प्रियव्रतनारदसंवादः | १३ | १५ |
| तृतीयाध्यायः | १६ | १ |
| नारदेन ब्रह्मपारकथनम् | १७ | ८ |
| चतुर्थाध्यायः | २० | ११ |
| वराहेण दशावतारकथनपूर्व्वकं नारायणस्वरूप-कथनम् | २१ | १ |
| अश्वशिरस उपाख्यानम् | २२ | १२ |

| विषया: | पृष्ठे | पङ्क्त्याम् |
|---|---|---|
| पञ्चमाध्याय: | २७ | ४ |
| अश्वशिर:कपिलसंवाद: | २७ | ११ |
| रैभ्योपाख्यानम् | २८ | ६ |
| यज्ञतनुस्तोत्रम् | ३४ | ३ |
| षष्ठाध्याय: | ३६ | १० |
| पुण्डरीकाक्षपारस्तोत्रम् | ३८ | २ |
| धर्म्मव्याधोपाख्यानम् | ३९ | ६ |
| सप्तमाध्याय: | ४३ | १ |
| रैभ्यसनत्कुमारसंवाद: | ४४ | ५ |
| रैभ्येण पितृदर्शनम् | ४६ | ९ |
| रैभ्यकृतगदाधरस्तोत्रम् | ४८ | १५ |
| अष्टमाध्याय: | ५१ | १२ |
| धर्म्मव्याधोपाख्यानम् | ५१ | १३ |
| धर्म्मव्याधकृतपुरुषोत्तमाख्यस्तोत्रम् | ५७ | ६ |
| नवमाध्याय: | ६० | १ |
| आदिकृतयुगवृत्तम् | ६० | ३ |
| दशमाध्याय: | ६५ | १ |
| विराट्रूपदर्शनम् | ६५ | १२ |
| सुप्रतीकोपाख्यानम् | ६७ | ७ |
| एकादशाध्याय: | ७५ | ६ |
| गौरमुखोपाख्यानम् | ७५ | ७ |

| विषयाः | पृष्ठे | पङ्क्त्याम् |
|---|---|---|
| द्वादशाध्यायः | ८९ | ६ |
| दुर्ज्जयकृतनारायणस्तोत्रम् | ९० | १ |
| त्रयोदशाध्यायः | ९४ | १ |
| गौरमुखमार्कण्डेयसंवादः | ९५ | ३ |
| श्राद्धकालः | ९७ | १५ |
| पितृगीता | १०० | ४ |
| श्राद्धे नियोज्यानां नामानि | १०१ | ४ |
| श्राद्धे अकीर्तनार्हाणां नामानि | १०२ | ४ |
| श्राद्धानुष्ठानपद्धतिः | १०२ | १० |
| गौरमुखस्य पूर्व्वजन्मवृत्तम् | १०८ | २ |
| गौरमुखकृतनारायणस्तोत्रम् | १०८ | १६ |
| दुर्ज्जयकृतस्वर्गजयः | १११ | १३ |
| प्रजापालचरितम् | ११६ | १ |
| अग्न्युत्पत्तिकथा | १२६ | १ |
| तिथिमाहात्म्यकथा | १२९ | १ |
| अश्विनीकुमारजन्मकथा | १३० | ९ |
| द्वितीयाकृत्यम् | १३५ | ६ |
| गौरीप्रादुर्भावकथा | १३५ | १५ |
| दक्षयज्ञकथा | १३७ | ३ |
| रुद्रसर्गः | १३८ | ८ |
| दक्षयज्ञविनाशः | १४० | १ |

| विषयाः | पृष्ठे | पङ्क्त्याम् |
|---|---|---|
| रुद्रस्तोत्रम् | १४२ | १९ |
| रुद्रप्रसादः | १४४ | ६ |
| पार्व्वतीजन्मकथा | १४६ | १ |
| हरपार्व्वतीविवाहः | १५० | १ |
| तृतीयाकृत्यम् | १५२ | ८ |
| गणेशजन्मकथा | १५२ | १३ |
| गणेशं प्रति महादेवस्य शापः | १५४ | १५ |
| गणेशस्तोत्रम् | १५७ | ८ |
| चतुर्थीकृत्यम् | १५७ | १६ |
| नागोत्पत्तिकथा | १५८ | ७ |
| पञ्चमीकृत्यम् | १६२ | ६ |
| कार्त्तिकेयोत्पत्तिकथा | १६२ | १३ |
| देवगणकृतमहादेवस्तोत्रम् | १६४ | १२ |
| षष्ठीमाहात्म्यम् | १६८ | १५ |
| आदित्योत्पत्तिकथा | १७० | ११ |
| सप्तमीकृत्यम् | १७२ | १३ |
| अन्धकासुरवधकथा | १७३ | ३ |
| मातृगणोत्पत्तिकथा | १७६ | ७ |
| अष्टमीकृत्यम् | १७७ | ८ |
| कात्यायन्युत्पत्तिकथा | १७७ | १५ |
| वेत्रासुरवृत्तम् | १७९ | १९ |

| विषयाः | पृष्ठे | पङ्क्तौ |
|---|---|---|
| सौभाग्यव्रतम् | २८२ | ६ |
| अविघ्नव्रतम् | २८४ | १३ |
| शान्तिव्रतम् | २८६ | ३ |
| कामव्रतम् | २८७ | ३ |
| आरोग्यव्रतम् | २८८ | ११ |
| पुत्रप्राप्तिव्रतम् | २९२ | ५ |
| शौर्य्यव्रतम् | २९४ | ३ |
| सार्व्वभौमव्रतम् | २९५ | ३ |
| नारदविष्णुसंवादः | २९७ | ६ |
| अहोरात्रचन्द्रसूर्य्यादिरहस्यकथनम् | २९९ | १३ |
| युगभेदे धर्मभेदकथनम् | ३०१ | ६ |
| गम्यागम्यानिरूपणम् | ३०२ | ३ |
| अगम्यागमनप्रायश्चित्तम् | ३०२ | १८ |
| अगस्त्यशरीरवृत्तम् | ३०३ | १२ |
| अगस्त्यावदानम् | ३०५ | १६ |
| त्रिदेवाभेदमधिकृत्य रुद्रोपदेशः | ३०७ | ३ |
| गौतममारीचशाण्डिल्यसंवादः | ३१२ | ४ |
| कालभेदे ब्रह्मादिदेवत्रयप्राधान्यनिरूपणम् | ३१९ | ६ |
| रुद्रकृतनारायणमाहात्म्यकीर्त्तनम् | ३२१ | ३ |
| रुद्रकृतनारायणस्तोत्रम् | ३२२ | १७ |
| भूमिप्रमाणादिकथनम् | ३२८ | १२ |

| विषयाः | पृष्ठे | पङ्क्तौ |
|---|---|---|
| जम्बूद्वीपप्रमाणादिकथनम् | ३३२ | १२ |
| अमरावतीवर्णनम् | ३४१ | ३ |
| मेरुमूलवर्णनम् | ३४३ | ३ |
| चैत्ररथादिशैलचतुष्टयवर्णनम् | ३४६ | १२ |
| सुरोचनीप्रमुखस्थानवर्णनम् | ३४९ | ११ |
| दाक्षिणात्यपर्व्वतवर्णनम् | ३५३ | ३ |
| पर्व्वतान्तेषु देवानामवकाशवर्णनम् | ३५६ | ११ |
| निषधाचलपश्चिमवर्त्तिपर्व्वतादीनां वर्णनम् | ३६१ | ११ |
| भारतवर्षवर्णनम् | ३६५ | ३ |
| शाकद्वीपवर्णनम् | ३६७ | ७ |
| कुशद्वीपवर्णनम् | ३६८ | ११ |
| क्रौञ्चद्वीपवर्णनम् | ३७० | ३ |
| शाल्मल्यादिद्वीपानां वर्णनम् | ३७१ | ७ |
| ब्रह्मादिदेवत्रयेषु परापरत्वविवेकः | ३७३ | ७ |
| अन्धकासुरकथा | ३७४ | १२ |
| वैष्णव्याद्युत्पत्तिः | ३७५ | ३ |
| ब्रह्मकृतशक्तिस्तोत्रम् | ३७९ | १० |
| वैष्णवीचरितम् | ३८० | ११ |
| वैष्णवीग्रहणार्थं महिषासुरस्य स्वामात्यैरभिमन्त्रणम् | ३८५ | १० |

| विषयाः | पृष्ठे | पङ्क्त्याम् |
|---|---|---|
| वैष्णवीग्रहणार्थं महिषासुरस्य मेरुपर्व्वतं प्रति प्रयाणम् | ३८८ | ३ |
| वैष्णवीमहिषासुरदूतसंवादः | ३८१ | ६ |
| महिषासुरवधः | ३८६ | १८ |
| देवगणकृतवैष्णवीस्तोत्रम् | ३८७ | १३ |
| रौद्रीचरितम् | ४०० | ३ |
| रुरुदैत्योपाख्यानम् | ४०० | ६ |
| रुरुदैत्यवधः | ४०१ | ८ |
| रुद्रकृतकालरात्रिस्तोत्रम् | ४०६ | १० |
| चामुण्डाभेदकथनम् | ४०८ | ८ |
| रुद्रस्य कपालित्वम् | ४११ | ७ |
| रुद्रकृतकापालिकव्रतानुष्ठानम् | ४१२ | २ |
| रुद्रस्य कपालमोचनम् | ४१४ | ७ |
| कपालव्रतफलाख्यानम् | ४१५ | ४ |
| सत्यतपसः सिद्धिः | ४१६ | ११ |
| वेत्रासुरकथा | ४२१ | १२ |
| महापातकनाशनोपायकथनम् | ४२२ | ८ |
| विष्णुपूजाविशेषप्रकारकथनम् | ४२२ | १७ |
| वराहपुराणश्रवणफलम् | ४२८ | १ |
| अन्नदानफलम् | ४२८ | ४ |
| तिलधेनुदानफलम् | ४३२ | १५ |

| विषयाः | पृष्ठे | पङ्क्त्याम् |
|---|---|---|
| जलधेनुदानफलम् | ४३४ | ७ |
| रसधेनुदानफलम् | ४३७ | ६ |
| गुडधेनुदानफलम् | ४३९ | ८ |
| शर्कराधेनुदानफलम् | ४४६ | ३ |
| मधुधेनुदानफलम् | ४४५ | १२ |
| क्षीरधेनुदानफलम् | ४४८ | १० |
| दधिधेनुदानफलम् | ४५१ | ९ |
| नवनीतधेनुदानफलम् | ४५३ | ६ |
| लवणधेनुदानफलम् | ४५६ | ३ |
| कार्पासधेनुदानफलम् | ४५८ | ७ |
| धान्यधेनुदानफलम् | ४६० | २ |
| कपिलाधेनुदानफलम् | ४६३ | ३ |
| उभयमुखीधेनुदानफलम् | ४६५ | ६ |
| वराहपुराणस्य प्रचारक्रमः | ४७३ | ११ |
| पुराणानां नामानि संख्या च | ४७४ | ८ |
| पृथिवीसनत्कुमारसंवादः | ४७६ | ५ |
| पृथ्वीं प्रति नारायणस्य प्रसादः | ४८४ | ३ |
| नारायणपृथिवीसंवादः | ४८५ | १ |
| विष्ण्वाराधनाप्रकारकथनम् | ४९२ | ७ |
| दुःखसौख्यभेदकथनम् | ५०० | २ |
| द्वात्रिंशापराधकथनम् | ५०१ | ३ |

| विषयाः | पृष्ठे | पङ्क्त्याम् |
|---|---|---|
| भक्तस्वरूपकथनम् | ५१० | १ |
| अपराधभञ्जनप्रायश्चित्तानि | ५१२ | ३ |
| आपणनिर्म्माणविधानम् | ५२१ | २ |
| त्रिसन्ध्यविष्णूपासनाविधिः | ५२४ | ६ |
| पुनर्जन्मवारणकर्म्माणि | ५२७ | ३ |
| सनातनधर्म्मस्वरूपकथनम् | ५२९ | १ |
| गर्भोत्पत्तिवारणकर्म्माणि | ५३० | २ |
| तिर्य्यग्योनिपतनवारणकर्म्माणि | ५३१ | ३ |
| कोकामुखक्षेत्रप्रशंसा | ५३३ | ११ |
| गन्धपुष्पविशेषदानमाहात्म्यम् | ५४९. | ७ |
| ऋतूपकरणदानमाहात्म्यम् | ५५४ | ३ |
| मायास्वरूपकथनम् | ५६२ | १४ |
| कुब्जाम्रकमाहात्म्यम् | ५८६ | ९ |
| संसारमोचकर्म्मकथनम् | ६१७ | १६ |
| क्षत्रियदीक्षाविधिः | ६२६ | १३ |
| वैश्यदीक्षाविधिः | ६२८ | ११ |
| शूद्रदीक्षाविधिः | ६३० | २ |
| दीक्षितकर्त्तव्यानि | ६३२ | २० |
| दीक्षितानां विष्णुपूजाविधिः | ६३९ | ३ |
| अपराधप्रायश्चित्तानि | ६४८ | १४ |
| दन्तकाष्ठाभक्षणप्रायश्चित्तम् | ६५१ | १७ |

| विषयाः | पृष्ठे | पङ्क्त्याम् |
|---|---|---|
| मृतस्पर्शप्रायश्चित्तम् | ६५६ | ५ |
| पुरीषोत्सर्गप्रायश्चित्तम् | ६५८ | ३ |
| अकार्य्याचरणप्रायश्चित्तम् | ६५८ | १७ |
| जालपादाद्यभक्ष्यभक्षणप्रायश्चित्तम् | ६६७ | २ |
| प्रायश्चित्तकर्म्मसूत्रम् | ६७३ | १५ |
| सौकरक्षेत्रमाहात्म्यवर्णनम् | ६८८ | १० |
| गृध्रशृगालीतिहासः | ६९४ | ४ |
| वैवस्वततीर्थमाहात्म्यवर्णनम् | ७१३ | ३ |
| खञ्जरीटोपाख्यानम् | ७१५ | ६ |
| सौकरक्षेत्रकर्म्मफलकथनम् | ७१६ | १० |
| गोमयलेपनादिफलकथनम् | ७२६ | ८ |
| चाण्डालब्रह्मराक्षससंवादः | ७२९ | १३ |
| कोकामुखस्य श्रेष्ठत्वनिरूपणम् | ७३८ | १७ |
| वदरिकाश्रममाहात्म्यवर्णनम् | ७४९ | ३ |
| गुह्यकर्म्माख्यानम् | ७५७ | ३ |
| मन्दारक्षेत्रमाहात्म्यवर्णनम् | ७६३ | ११ |
| शालग्राममाहात्म्यवर्णनम् | ७६९ | १० |
| त्रिवेणीमाहात्म्यवर्णनम् | ७७९ | ११ |
| गण्डकीमाहात्म्यवर्णनम् | ७८१ | ३ |
| सालङ्कायनकोपाख्यानम् | ७८७ | ११ |
| रुरूपाख्यानम्, रुरुक्षेत्रमाहात्म्यवर्णनञ्च | ८०१ | ११ |

| विषयाः | पृष्ठे | पङ्क्त्याम् |
|---|---|---|
| हृषीकेशमाहात्म्यवर्णनम् | ८०७ | १ |
| गोनिष्क्रमणमाहात्म्यवर्णनम् | ८०९ | १० |
| स्तुतस्वामितीर्थमाहात्म्यवर्णनम् | ८१७ | १ |
| द्वारवतीमाहात्म्यवर्णनम् | ८२५ | ७ |
| सानन्दूरमाहात्म्यवर्णनम् | ८३५ | १२ |
| लोहार्गलमाहात्म्यवर्णनम् | ८४१ | २० |
| पञ्चसरःक्षेत्रमाहात्म्यवर्णनम् | ८४४ | १९ |
| मथुरामण्डलमाहात्म्यवर्णनम् | ८५० | १८ |
| मथुरामण्डले अक्रूरतीर्थमाहात्म्यवर्णनम् | ८६६ | ६ |
| मथुरामण्डले वत्सक्रीड़नतीर्थमाहात्म्यवर्णनम् | ८७४ | १० |
| मथुरामण्डले मलयार्ज्जुनतीर्थमाहात्म्यवर्णनम् | ८७६ | १६ |
| मथुरापरिक्रमणफलम् | ८८७ | ७ |
| विश्रान्तितीर्थमाहात्म्यवर्णनम् | ८८९ | ९ |
| देववनप्रभाववर्णनम् | ८९८ | ६ |
| चक्रतीर्थमाहात्म्यवर्णनम् | ८९९ | ९ |
| गोवर्द्धनमाहात्म्यवर्णनम् | ९१३ | ९ |
| मथुरामण्डले कूपमाहात्म्यवर्णनम् | ९२२ | १८ |
| असिकुण्डमाहात्म्यवर्णनम् | ९२५ | १५ |
| मथुरामण्डले गोकर्णमाहात्म्यवर्णनम् | ९४१ | ३ |
| शुकेश्वरमाहात्म्यवर्णनम् | ९६५ | ९ |
| महानसप्रेतसंवादः | ९६७ | ४ |

| विषयाः | पृष्ठे | पङ्क्त्याम् |
|---|---|---|
| सरस्वतीयमुनासङ्गमे विष्णुपूजाफलकथनम् | ९७६ | १३ |
| कृष्णगङ्गामाहात्म्यवर्णनम् | ९७८ | ८ |
| पाञ्चालब्राह्मणेतिहासवर्णनम् | ९८१ | ७ |
| शाम्बोपाख्यानम् | ९९१ | ३ |
| रामतीर्थे द्वादशीव्रतमाहात्म्यवर्णनम् | ९९८ | १ |
| प्रायश्चित्तनिरूपणम् | ९९९ | ७ |
| सैतिहासध्रुवतीर्थमाहात्म्यवर्णनम् | १००३ | ३ |
| काष्ठप्रतिमास्थापनविधानम् | १०१७ | १५ |
| शैलप्रतिमास्थापनविधानम् | १०१९ | १५ |
| मृण्मयप्रतिमास्थापनविधानम् | १०२५ | ३ |
| ताम्रप्रतिमास्थापनविधानम् | १०२९ | ९ |
| कांस्यप्रतिमास्थापनविधानम् | १०३२ | १३ |
| राजतप्रतिमास्थापनविधानम् | १०३७ | ७ |
| श्राद्धोत्पत्तिवर्णनम् | १०४५ | ४ |
| अशौचनिरूपणम् | १०५३ | १२ |
| मेधातिथिपितृसंवादः | १०७१ | १५ |
| पिण्डसङ्ख्याप्रकारः | १०७६ | ४ |
| मधुपर्कनिरूपणम् | १०९० | ८ |
| मधुपर्कदानप्रकारकथनम् | १०९३ | २ |
| यमालयादिस्वरूपकथनम् | १०९८ | १२ |
| नाचिकेतस्य यमालयात्प्रत्यागमनम् | ११०३ | ३ |

| विषयाः | पृष्ठे | पङ्क्त्याम् |
|---|---|---|
| यमनगरस्य प्रमाणादिकथनम् | १११६ | ३ |
| यमसभावर्णनम् | ११२१ | १५ |
| पापिनां गतिवर्णनम् | ११३० | १७ |
| नरकाणां वर्णनम् | ११३५ | ३ |
| यमदूतानां स्वरूपवर्णनम् | ११४२ | ३ |
| चित्रगुप्तप्रभाववर्णनम् | ११४८ | ३ |
| चित्रगुप्तकृतप्रायश्चित्तनिर्देशः | ११५८ | ३ |
| चित्रगुप्तकृतदूतप्रेषणम् | ११६५ | ७ |
| यमचित्रगुप्तसंवादः | ११६८ | ८ |
| चित्रगुप्तकृतशुभकर्म्मफलनिर्देशः | ११७२ | ३ |
| नारदसन्दिष्टपुरुषविलोभनानि | ११७६ | १४ |
| पतिव्रतोपाख्यानम् | ११८५ | ४ |
| यमनारदसंवादः | ११८३ | ७ |
| भास्करकृतधर्म्मोपदेशः | ११८५ | १६ |
| प्रबोधिनीमाहात्म्यकथनम् | १२०५ | १६ |
| गोकर्णेश्वरमाहात्म्यवर्णनम् | १२१५ | ७ |
| नन्दिकेश्वरवरप्रदानोपाख्यानम् | १२२४ | १४ |
| जलेश्वरमाहात्म्यवर्णनम् | १२३४ | ३ |
| शृङ्गेश्वरमाहात्म्यवर्णनम् | १२४६ | ११ |
| फलश्रुतिः | १२५० | २ |
| विषयानुक्रमणी | १२५२ | १२ |

## आर्षप्रयोग-शुद्धाशुद्धानां विवेकः ।

सन्ति खल्वत्रास्मत्प्रदर्शितेभ्योऽप्यतिरिक्ता आर्षप्रयोगास्ते च दिङ्मात्रमुदाह्रियन्ते—

तेनैव स्थितौ वाराहमूर्त्तिना (२अ, १) इति आर्षं, तयैव वाराहमूर्त्त्या इति साधु ।

तिर्य्यक्स्रोतस्तु वै यस्मात्तिर्य्यक्स्रोतस्तु वै स्मृतः (२अ,३०), तिर्य्यक्स्रोतश्चतुर्मुखः (२अ, ३१) इत्यादिषु तिर्य्यक्स्रोत इति आर्षं, तिर्य्यक्स्रोता इति साधु । एवं (२अ, ३२ श्लोके) ऊर्द्ध्व-स्रोतस्त्रिधा इत्यत्र ऊर्द्ध्वस्रोता इति साधु । एवमतः परं—ततः स चिन्तयामास अर्व्वाक्स्रोतस्तु स प्रभुरित्यत्र अर्व्वाक्स्रोतस-मिति साधु सर्गविशेषणत्वात् । तिर्य्यक्स्रोतश्च यः प्रोक्तस्तै-र्य्यक्स्रोतः स उच्यते (२अ, ३८) अत्र क्रमेण तिर्य्यक्स्रोताः तैर्य्यक्स्रोतस इति साधु ।

स्वयम्भुवः (४अ, ११) स्वायम्भुव इति साधु ।

तं जिघांसुः (५अ, २०) तज्जिघांसुरिति साधु ।

काष्ठसञ्चयं (५अ, २८) काष्ठसञ्चय इति साधु ।

रैभ्यराजवसौ: (५अ, ४३) रैभ्यराजवस्वोरिति साधु ।

परिवारितः (६अ, २१) परिवृत इति साधु ।

कण्ठगैन प्राणैन (६अ, २८) कण्ठगैः प्राणैरिति साधु ।

यदोढ़ा (८अ, ३८) यदूढ़ा इति साधु ।

इषेत् (८अ, ४०) इच्छेदिति साधु ।

हस्त्यश्वरथवाजिभिः (१०अ, ३५) अत्र पौनरुक्त्यमार्षम्।

देवराजानं (१०अ, ४) देवराजमिति साधु।

क इमे (१०अ, ५३) के इमे इति साधु।

प्रतस्थुः (१०अ, ६३) प्रतस्थिरे इति साधु।

करिष्यामि (११अ, ४) कारयिष्यामीति साधु।

वसवादयः (१३अ, ३०) वस्वादयः इति साधु।

वेपती (१६अ, १९-२०) वेपमाना इति साधु।

प्रजाः सृजस्व (२१अ, ६) सृज इति साधु।

चतुर्णां नरजातीनां (२१अ. १६) चतसृणां नरजातीनामिति साधु।

हिमवन्तंगृहे (२२अ, ७) हिमवद्गृहे इति साधु।

युध्यतः (२२अ, १३) युध्यमानानिति साधु।

दद्मि (६६अ, ८) ददामीति साधु।

सत्त्वरजसोबहुले (६८अ, ४) सत्त्वरजोबहुले इति साधु।

सा मां प्रादात् (६९अ, १०) सा मह्यं प्रादादिति साधु।

रुद्राश्रिताः क्षेत्राः (९९अ, १८) रुद्राश्रितानि क्षेत्राणीति साधु।

गायमानस्य वाद्यमानस्य (७१५ पृ, १७प,) गायतो वादयत इति साधु।

सन्त्यन्येऽपि सहृदयैः स्वयमुद्भावनीयाः। दृश्यन्ते चात्र क्वचित् क्वचित् प्रमादकृतानि वर्णविन्यासविपर्य्यासरूपस्खलितानि। यथा—

| अशुद्धं | शुद्धं | पृष्ठे | पङ्क्तौ |
|---|---|---|---|
| तिर्य्यक्स्रतसु | तिर्य्यक्स्रोतसु | १० | ३ |
| त्रिवेदगम्य | त्रिवेदगम्यं | १८ | ११ |
| भगवती | भगवत: | २१ | ८ |
| निर्वृत्ति | निवृत्ति | ४१ | ५ |
| निर्ज्जितं | निर्ज्जित: | ७१ | १ |
| सुप्रकतीस्य | सुप्रतीकस्य | ८२ | ५ |
| सर्व्वगत्वा च | सर्व्वगत्वाच्च | १२८ | ६ |
| त्वयं ब्रह्मा | स्वयं ब्रह्मा | १३८ | ७ |
| कथया | कथाया | २६७ | १४ |
| आधार: | आचार: | ४८५ | १३ |
| मम लोकस्थिता: सा | मम लोकस्थिता सा | ५१० | ११ |

इति दिक्।

---

# वराहपुराणम् ।

## श्रीगणेशाय नमः ।

### प्रथमोऽध्यायः ।

नारायणं नमस्कृत्य नरञ्चैव नरोत्तमम् ।
देवीं सरस्वतीञ्चैव ततोजयमुदीरयेत् ॥*

नमस्तस्मै वराहाय लीलयोद्धरते महीम् ।
खुरमध्यगतो यस्य मेरुः खणखणायते ॥ १ ।

दंष्ट्राग्रेणोऽद्धृता गौरुदधिपरिवृता पर्वतैर्निम्नगाभिः
साकं मृत्पिण्डवत्प्राग्बृहदुरुवपुषा†ऽनन्तरूपेण येन ।
सोऽयं कंसासुरारिर्मुरनरकदशास्यान्तकृत्‡ सर्वसंस्थः
कृष्णोविष्णुः सुरेशो नुदतु§ मम रिपूनादिदेवो वराहः ॥ २।¶

---

* (क) पुस्तके एष श्लोको नास्ति ।

† गुरुतरवपुषा इति (ख) ।

‡ मधुनरकदशास्यान्तकृदिति (ख) ।

§ (ग) पुस्तके नुदति मम रिपूनिति पाठो वर्त्तते ।

¶ (ख) (ग) पुस्तकयोः

"यः संसारार्णवे नौरिव मरणजराव्याधिनक्रोर्म्मिभीते
भक्तानां भीतिहर्त्ता मुरनरकदशास्यान्तकृल्लोकरूपी ।

सूत उवाच ।

यस्मिन्काले क्षितिः पूर्व्वं वराहवपुषा तु सा* ।
उद्धृता विभुना भक्त्या† पप्रच्छ परमेश्वरम् ॥ ३ ॥

धरण्युवाच । ‡

कल्पे कल्पे भवानेव मां समुद्धरति प्रभो§ ।
न चाहं वेद ते मूर्त्तिमादिसर्गं च¶ केशव ॥ ४ ॥
वेदेषु चैव नष्टेषु‖ मत्स्योभूत्वा रसातलात्** ।
प्रविश्य तानथोत्कृष्य ब्रह्मणे दत्तवानसि ॥ ५ ॥
अन्यत्सुरासुरमिते†† त्वं समुद्रस्य मन्थने ।
धृतवानसि कौर्म्म्येण मन्दरं मधुसूदन ॥ ६ ॥
पुनश्च गां जगन्नाथ निमज्जन्तीं रसातलात्‡‡ ।

---

विष्णुः सर्व्वेश्वरीऽयं यमिह कृतधियो लीलया प्राप्नुवन्ति
व्यक्तात्मानो न पापं प्रभवमनुदिताऽरातिपचः क्षितीशः ॥
एष श्लोकोऽस्ति । (ख) पुस्तके अस्मात्परं सूत उवाच इति पाठो नास्ति ।

* (ख) पुस्तके कल्पवाराहरूपिणेति पाठः ।

† उद्धृता नमिता भक्त्या इति (ख) ।

‡ (ख) एष पाठः (क) (ख) पुस्तकयोर्नास्ति ।

§ कस्मिन् काले भवानेव मां समुद्धरते विभो इति (ग) । अत्र समुद्धरते इत्यात्मनेपदमार्षम् ।

¶ मादिसर्गेषु इति (ख) ।

‖ विप्रनष्टेषु इति (ख) ।

** रसातले इति (घ) ।

†† देवासुरमिते इति (ख) । सुरासुरनयमिति (ग) ।

‡‡ पुनर्वराहरूपेण आगच्छन्तीं रसातलमिति (ख) ।

